प्रत्नमित् पुराणमेव पयोरसं दुहानः दधानः सोमः पवित्रे परिषिच्यते। किंच क्रन्दन् शब्दं र्वन् देवानजीजनत् जनयति स्वसमीपे यत्र सोमोभिषूयते तत्र देवानियतं प्रादुर्भवन्ति अतो नयतीत्युपचर्यते ॥ ४ ॥

अथ पञ्चमी–

अभिविश्वा॑निवार्या॒भिदेवाँऋ॑तावृधः। सोमः॑पुना॒नोअ॑र्षति ॥५॥

अ॒भि। विश्वा॑नि। वार्या॑। अ॒भि। दे॒वान्।

ऋ॒त॒ऽवृधः॑। सोमः॑। पु॒ना॒नः। अ॒र्ष॒ति॒ ॥ ५ ॥

अयं सोमः पुनानः पूयमानो विश्वानि वार्या वरणीयानि धनान्यभ्यर्षति तथा ऋतावृधो ज्ञवर्धकान् देवानभ्यर्षति ॥ ५ ॥

अथ षष्ठी–

गोम॑न्नःसोमवी॒रव॒दश्वा॑व॒द्वाज॑वत्सु॒तः। पव॑स्वबृ॒ह॒तीरिषः॑ ॥६॥३२॥

गोऽम॑त्। नः॒। सो॒म॒। वी॒रऽव॑त्। अश्व॑ऽवत्।

वाज॑ऽवत्। सु॒तः। पव॑स्व। बृ॒ह॒तीः। इषः॑ ॥ ६ ॥ ३२ ॥

हे सोम सुतस्त्वं नोस्मभ्यं गोमत् गोभिर्युक्तं वीरवद्बहुभिः वीरैरुपेतं अश्वावदश्वैर्युक्तं वाजवद्वाजैर्बलैः संग्रामैर्वोपेतं धनं बृहतीरिषः प्रभूतान्यन्नानि पवस्व प्रयच्छेत्यर्थः ॥ ६ ॥

॥ इति पष्ठस्याष्टमे द्वात्रिंशोवर्गः ॥ ३२ ॥

योअत्यइवेति षळृचमेकोनविंशंसूक्तं ऋष्याद्याःपूर्ववत् योअत्यइवेत्यनुक्रान्तं गतोविनियोगः।

तत्र प्रथमा–

योअत्य॑इवमृ॒ज्यते॒गोभि॒र्मदा॑यह॒र्य॒तः। तंगी॒र्भिर्वा॑सयामसि ॥१॥

यः। अत्यः॑ऽइव। मृ॒ज्यते॑। गोभिः॑। मदा॑य।

ह॒र्य॒तः। तम्। गीः॒ऽभिः। वा॒स॒या॒म॒सि॒ ॥ १ ॥

यः सोमः अत्यइव अतनशीलोश्वइव गोभिर्वसतीवरीभिरद्भिर्गोविकारैः पयआदिभिर्वा मृज्यते मिश्रयते किमर्थं मदाय देवानां। कीदृशोयः हर्यतः कान्तः तं सोमं गीर्भिः स्तुतिभिर्वासयामसि वासयामः ॥ १ ॥

अथ द्वितीया—

तन्नोविश्वांअवस्युवोगिरःशुम्भन्तिपूर्वथा। इन्दुमिन्द्रायपीतये ॥ २।

तम्। नः। विश्वाः। अवस्युवः। गिरः। शुम्भन्ति।
पूर्वऽथा। इन्दुम्। इन्द्राय। पीतये ॥ २ ॥

तमिन्दुं सोमं नोस्माकं विश्वाः सर्वाअवस्युवः अवोरक्षणं तदिच्छंत्योगिरः स्तुतयः पूर्वथा पूर्वमिव पूर्वं यथा तथैवेदानीमपि शुंभन्ति दीपयंति किमर्थमिन्द्रायेन्द्रस्य पीतये पानाय ॥ २ ॥

अथ तृतीया—

पुनानोयातिहर्यतःसोमोगीर्भिःपरिष्कृतः। विप्रस्यमेध्यातिथेः॥३।

पुनानः। याति। हर्यतः। सोमः। गीःऽभिः।
परिऽकृतः। विप्रस्य। मेध्यऽअतिथेः ॥ ३ ॥

पुनानः पूयमानोहर्यतः कमनीयः सोमोगीर्भिः परिष्कृतः स्तुतिभिरलंकृतोयाति कलशंप्रति। किमर्थं विप्रस्य मेधाविनो मेध्यातिथेर्ममयागार्थं यद्वा ममगीर्भिरिति संबंधः ॥ ३ ॥

अथ चतुर्थी—

पवमानविदारयिमस्मभ्यंसोमसुश्रियम्। इन्दोसहस्रवर्चसम्॥४।

पवमान। विदाः। रयिम्। अस्मभ्यम्। सोम।
सुऽश्रियम्। इन्दो इति। सहस्रऽवर्चसम् ॥ ४ ॥

हे पवमानसोम इन्दोस्मभ्यं सुश्रियं शोभनया श्रिया युक्तं सहस्रवर्चसं बहुदीप्तिं रयिं धनं विदाः देहीत्यर्थः ॥ ४ ॥

अथ पंचमी—

इन्दुरत्योनवाजसृत्कनिक्रन्तिपवित्रआ । यदक्षारतिदेवयुः ॥ ५ ॥

इन्दुः । अत्यः । न । वाजऽसृत् । कनिक्रन्ति ।
पवित्रे । आ । यत् । अक्षाः । अति । देवऽयुः ॥ ५ ॥

यः इन्दुः वाजसृत् संग्रामसरणः अत्योन अश्वइव पवित्र आ पवित्रे कनिक्रन्ति शब्दं रोति यद्यदा अक्षाः क्षरति । क्षरसंचलने इत्यस्माच्छान्दसे लुङि तिपि सिच् बहुलंछन्दसी-डभावः इडभावश्च रात्सस्येतिसलोपः । देवयुर्देवकामः सन् तदा अतिशब्दं करोति ॥ ५ ॥

अथ षष्ठी—

पवस्ववाजसातयेविप्रस्यगृणतोवृधे । सोमरास्वसुवीर्यम् ॥ ६ ॥ ३३ ॥

पवस्व । वाजऽसातये । विप्रस्य । गृणतः ।
वृधे । सोम । रास्व । सुऽवीर्यम् ॥ ६ ॥ ३३ ॥

हे सोम पवस्व क्षर । किमर्थं वाजसातयेन्नस्य लाभाय । तथा गृणतः स्तुवतो विप्रस्य म मेध्यातिथेर्वृधे वर्धनायच हे सोम सुवीर्यं शोभनवीर्योपेतं पुत्रंच रास्व देहीति ॥ ६ ॥

॥ इति षष्ठस्याष्टमे त्रयस्त्रिंशोवर्गः ॥ ३३ ॥

वेदार्थस्यप्रकाशेन तमोहार्दंनिवारयन् । पुमर्थांश्चतुरोदेयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इतिश्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सा-णाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये षष्ठाष्टकेष्टमोध्यायः ॥ ८ ॥

॥ इतिषष्ठोष्टकः समाप्तः ॥ ६ ॥